# न्यासतिलकम्

श्रीमते निगमान्तमहादेशिकाय नमः ।
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी ।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥

गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राद्यौ दम्पती जगतां पती ॥ १॥

प्रायः प्रपदने पुंसां पौनःपुन्यं निवारयन् ।
हस्तः श्रीरङ्गभर्तुर्मामव्यादभय मुद्रितः ॥ २॥

अनादेर्निःसीम्नो दुरितजलधेर्यन्निरूपमं
विदुः प्रायश्चित्तं यदुरघुधुरीणाशयविदः ।
तदारम्भे तस्या गिरमवदधानेन मनसा
प्रपद्ये तामेकां श्रियमखिलनाथस्य महिषीम् ॥ ३॥

महेन्द्राग्नाविष्णुप्रभृतिषु महत्त्वप्रभृतिवत्
प्रपत्तव्ये तत्त्वे परिणमितवैशिष्ट्यविभवाम् ।
अधृष्यत्वं धूत्वा कमितुरभिगम्यत्वजननीं
श्रियं शीतापाङ्गामहमशरणो यामि शरणम् ॥ ४॥

स्वतःसिद्ध श्रीमानमितगुणभूमा करुणया
विधाय ब्रह्मादीन्वितरति निजादेशमपि यः ।
प्रपत्त्या साक्षाद्वा भजन शिरसा वाऽपि सुलभं
मुमुक्षुर्देवेशं तमहमधिगच्छामि शरणम् ॥ ५॥

वृन्दानि यः स्ववशयन्व्रजसुन्दरीणाम्
वृन्दावनान्तरभुवां सुलभो बभूव ।
श्रीमानशेषजनसङ्ग्रहणाय शेते
रङ्गे भुजङ्गशयने स महाभुजङ्गः ॥ ६॥

रङ्गास्तीर्णभुजङ्गपुङ्गववपुःपर्यङ्कवर्यं गतौ
सर्गस्थित्यवसानकेलिरसिकौ तौ दम्पती नः पती ।
नाभीपङ्कजशायिनः श्रुतिसुखैरन्योन्यबद्धस्मितौ
डिम्भस्याम्बुजसम्भवस्य वचनैरोन्तत्सदित्यादिभिः ॥ ७॥

घनकरुणारसौघभरितां परितापहरां
नयनमहश्छटां मयि तरङ्गय रङ्गपते ।

दुरितहुताशनस्फुरितदुर्दमदुःख मषी-
मलिनितविश्वसौधदुरपह्नववर्णसुधाम् ॥ ८॥

दुर्मोचोद्भटकर्मकोटिनिबिडोऽप्यादेशवश्यः कृतः
बाह्यैर्नैव विमोहितोऽस्मि कुदृशां पक्षैर्न विक्षोभितः ।
यो माहानसिको महान्यतिपतेर्नीतश्च तत्पौत्रजान्
आचार्यानिति रङ्गधुर्य मयि ते स्वल्पावशिष्टो भरः ॥ ९॥

आर्तेष्वाशुफला तदन्यविषयेऽप्युच्छिन्नदेहान्तरा
वह्न्यादेरनपेक्षणात्तनुभृतां सत्यादिवद्व्यापिनी ।
श्रीरङ्गेश्वर यावदात्मनियतत्वत्पारतन्त्र्योचिता
त्वय्येव त्वदुपायधीरपिहितस्वोपायभावाऽस्तु मे ॥ १०॥

त्वय्याचार्यैर्विनिहितभरास्तावका रङ्गनाथ
त्वत्कैङ्गर्यप्रवणमनसस्त्वद्गुणास्वादमत्ताः ।
त्वय्येकस्मिन्नपि विजहतो मुक्तवत्साधनत्वं
त्वच्छेषत्वस्वरसरसिकाः सूरयो मे स्वदन्ताम् ॥ ११॥

कल्पस्तोमेऽप्यपास्तत्वदितरगतयोऽशक्तिधीभक्तिभूम्ना
रङ्गेश प्रातिकूल्यक्षरणपरिणमन्निर्विघातानुकूल्याः ।
त्रातारं त्वामभेद्याच्छरणवरणतो नाथ निर्विघ्नयन्तः
त्वन्निक्षिप्तात्मरक्षां प्रति रभसजुषः स्वप्रवृत्तिं त्यजन्ति ॥ १२॥

त्यक्तोपायव्यपायांस्तदुभयकरणे सत्रपान्सानुतापान्
भूयोऽपि त्वत्प्रपत्त्या प्रशमितकलुषान्हन्त सर्वंसहस्त्वम् ।
रङ्गिन् न्यासान्तरङ्गाखिलजनहिततागोचरत्वन्निदेश-
प्रीतिप्राप्तस्ववर्णाश्रमशुभचरितान्पासि धन्याननन्यान् ॥ १३॥

शोकास्पदांशमथनः श्रयतां भवाब्धौ
रागास्पदांशसहजं न रुणत्सि दुःखम् ।
नो चेदमी जगति रङ्गधुरीण भूयः
क्षोदिष्ठभोगरसिकास्तव न स्मरेयुः ॥ १४॥

हेतुर्वैधे विमर्शे भजनवदितरत् किं त्वनुष्ठानकाले
वेद्यत्वद्रूपभेदो विविध इह स तूपायान्यनपेक्षा ।
रङ्गिन्प्रारब्धभङ्गात्फलमधिकमनावृत्तिरुक्तेष्टिवन्स्यात्
नाना शब्दादिभेदात्प्रपदनभजने सूचिते सूत्रकारैः ॥ १५॥

भक्तौ रङ्गपते यथा खलु पशुच्छागादिवत्वेदन-
ध्यानोपासनदर्शनादिवचसामिच्छन्त्यभिन्नार्थताम् ।
व्यक्त्यैक्याच्छरणागतिप्रपदनत्यागात्मनिक्षेपण-
न्यासाद्येषु तथैव तन्त्रनिपुणैः पर्यायता स्मर्यते ॥ १६॥

विश्वासायासभूम्नोर्न्यसनभजनयोर्गौरवे को विशेषः
तत्सद्भावेऽपि धर्मान्तर इव घटते कर्तृभेदाद्विकल्पः ।
तद्भेदो रङ्गशायिन्ननितरगतिताद्युत्थशोकातिरेकात्
सद्विद्यादौ विकल्पस्त्वभिमतिभिदया तेन तत्रैकराश्यम् ॥ १७॥

ध्रुवमधिकृतिभेदाद्कर्मवत्रङ्गशायिन्
फलति फलमनेकं त्वत्पदे भक्तिरेका ।
शरणवरणवाणी सर्वहेतुस्तथाऽसौ
कृपणभजननिष्ठा बुद्धिदौर्बल्यकाष्ठा ॥ १८॥

कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो नश्यति
ब्रह्मेशादिसुदुर्लभं पदमपि प्राप्यं मया द्रागिति ।
विश्वासप्रतिबन्धिचिन्तनमिदं पर्यस्यति न्यस्यतां
रङ्गाधीश रमापतित्वसुभगं नारायणत्वं तव ॥ १९॥

धीकर्मभक्तिरहितस्य कदाऽप्यशक्त्या
रङ्गेश भावकलुषप्रणतिद्वयोक्तेः ।
मन्ये बलं प्रबलदुष्कृतशालिनो मे
त्वन्मूलदेशिककटाक्षनिपातमाद्यम् ॥ २०॥

अन्धोऽनन्धग्रहणवशगो याति रङ्गेश यद्वत्
पङ्गुर्नौकाकुहरनिहितो नीयते नाविकेन ।
भुङ्क्ते भोगानविदितनृपः सेवकस्यार्भकादिः
त्वत्सम्प्राप्तौ प्रभवति तथा देशिको मे दयाळुः ॥ २१॥

उक्त्या धनञ्जयविभीषणलक्ष्यया ते
प्रत्याय्य लक्ष्मणमुनेर्भवता वितीर्णम् ।
श्रुत्वा वरं तदनुबन्धमदावलिप्ते
नित्यं प्रसीद भगवन्मयि रङ्गनाथ ॥ २२॥

सकृदपि विनतानां सर्वदे सर्वदेहिनि
उपनिषदभिधेये भागधेये विधेये ।
विरमति न कदाचिन्मोहतो हा हतोऽहं

विषमविषयचिन्तामेदुरा मे दुराशा ॥ २३॥

यावज्जीवं जगति नियतं देहयात्रा भवित्री
त्यक्ताः सर्वे त्रिचतुरदिनग्लानभोगा नभोगाः ।
दत्ते रङ्गी निजमपि पदं देशिकादेशकाङ्क्षी
किं ते चिन्ते परमभिमतं खिद्यसे यत् पुनस्त्वम् ॥ २४॥

अपि मुहुरपराधैरप्रकम्प्यानुकम्पे
वहति महति योग क्षेम वृन्दं मुकुन्दे ।
मदकलुषमनीषावज्रलेपावलेपान्
अणुगुणयितुमीहे न प्रभूनप्रभूतान् ॥ २५॥

मातर्भारति मुञ्च मानुषचटून्हे देह लब्धैरलं
लुब्धद्वारदुरासिकापरिभवैस्तोषं जुषेथा मनः ।
वाचः सीमनि रङ्गधामनि महानन्दोन्नमद्भूमनि
स्वामिन्यात्मनि वेङ्गटेश्वरकवेः स्वेनार्पितोऽयं भरः ॥ २६॥

दास्यं लास्यवताऽनुमत्य मनसा रङ्गेश्वर त्वत्पदे
नित्यं किङ्करवाण्यहं न तु पुनः कुर्यां कदर्याश्रयाम् ।
मीलच्चक्षुषि वेल्लितभ्रुणि मुहुर्दत्तावमानाक्षरे
भीमे कस्यचिदाढ्यकस्य वदने भिक्षाविलक्षां दृशम् ॥ २७॥

त्वय्येकाञ्चलिकिङ्करे तनुभृतां निर्व्याजसर्वंसहे
कल्याणात्मनि रङ्गनाथ कमलाकान्ते मुकुन्दे स्थिते ।
स्वामिन्पाहि दयस्व देव कुशलिन्जीव प्रभो भावयेति
आलापानवलेपिषु प्रलपितुं जिह्रेति जिह्वा मम ॥ २८॥

त्वयि सति रङ्गधुर्य शरणागतकामदुधे
निरुपधिकप्रवाहकरुणापरिणाहवति ।
परिमितदेशकालफलदान्फलदाकृतिकान्
कथमधिकुर्महे विधिशिवप्रमुखानमुखान् ॥ २९॥

ओमित्यभ्युपगम्य रङ्गनृपतेऽनन्योचितां शेषतां
स्वातन्त्र्यादिमयीमपोह्य महतीमाद्यामविद्यास्थितिम् ।
नित्यासङ्ख्यविसीमभूतिगुणयोर्यायामनायासतः
सेवासम्पदमिन्दिरेश युवयोरैकान्तिकात्यन्तिकीम् ॥ ३०॥

आचार्याद्रङ्गधुर्य द्वयसमधिगमे लब्धसत्तं तदात्वे

विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरं यापितारब्धदेहम् ।
नीतं त्वत्कैस्त्वया वा निरवधिकदयोद्भूतबोधादिरूपं
त्वद्भोगैकस्वभोगं दयितमनुचरं त्वत्कृते मां कुरुष्व ॥ ३१॥

विधानां रङ्गेशादधिगतवतो वेङ्गटकवेः
स्फुरद्वर्णं वक्त्रे परिकलयतां न्यासतिलकम् ।
इहामुत्राप्येष प्रणतजनचिन्तामणिगिरिः
स्वपर्यङ्के सेवां दिशति फणिपर्यङ्करसिकः ॥ ३२॥

इति वेदान्तदेशिकविरचितं न्यासतिलकं सम्पूर्णम् ।